उप० ॥ **ब्रह्मणो वा एतद्विजये देवा अमहीयध्वमिति । ततो ह वै विदांचकार ब्रह्मेति । तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुः । ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति । तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान । स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत्प्रथमो विदांचकार ब्रह्मेति । तस्यैष आदेशो यदेतद्विद्युतोऽभिव्यद्युतदा३इति ।**

भा० ॥ विष्णुं परं पदम् । यस्माद्ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा ॥ सभार्या गर्विणो नासन्सुरेभ्यस्तेऽधिकास्ततः । इन्द्रस्तु प्रथमं ब्रह्म व्यजानात्तेन तूत्तमः ॥ दक्षादिभ्यस्तथा कामस्तज्ज्ञातुं पूर्वमुक्तवान् । दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा ॥ सूर्याचन्द्रमसौ धर्मो वरुणश्चोचुरोमिति । नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम् ॥ सर्वदेवाधिकास्तस्माद्

---

ज्ञातुमिन्द्रस्योमित्यनुमतिकर्तारो दक्षाद्या वरुणपर्यन्ता देवा इत्यर्थः । न चात्र शङ्कनीयम् । इन्द्रादपि पूर्वगमनादग्निवायू इन्द्रादप्युत्तमाविति । निष्फलगमनकर्त्रोरपि सफलगमनकर्तुरिन्द्रस्योत्तमत्वावश्यम्भावात् । अस्तु तर्ह्यगन्तृभ्यो दक्षादिभ्योऽप्यनयोरुत्तमत्वमिति चेन्न । निष्फलगमनकर्त्रोरपेक्षया सफलगमनानुमन्तॄणामेव फलोपयोगित्वेनोत्तमत्वौचित्यात् । गत्वा ज्ञानदातुरिन्द्रात्प्रथममिन्द्रगमनोत्थापकात्कामाच्च दक्षादीनामवमत्वस्य च न्यायप्राप्तत्वादुपनिषदुक्तदेवतातारतम्यस्यैव स्पष्टीकरणादिति ज्ञेयम् । "**तस्माद्वा एते देवा अतितरामिवान्यान्देवा**"नित्यत्र इवशब्देन यथाऽन्ये देवा ऋष्यादिभ्योऽतितरामतिशयेन वर्तन्त इवैवमेते वाय्वग्नीन्द्राख्या देवा अन्यान्देवानतितरामतिशयेन वर्तन्त इत्युपमया तारतम्यान्तरं सूचितमिति ज्ञेयम् । एवमुत्तरत्रापि । यथा दक्षादयोऽग्निवायुभ्यामधिका इव । एवमिन्द्रो दक्षादिभ्योऽप्यतितरामतिशयेन वर्तत इति देवेष्ववान्तरतारतम्यमपि सूचितमिति ज्ञेयम् । अव्ययानामनेकार्थत्वादवधारणार्थो वा । ब्रह्मरुद्रशेषगरुडानामसुरावेशाभावादेते देवा असुरावेशादहङ्कारकर्तृभ्य एतेभ्यो देवेभ्योऽतितरामिवातिशयेन वर्तन्त एवेत्युपनिषदोऽभिसन्धिः । एवं चोपनिषदङ्गना रमा पूर्वोत्तरपर्यालोचनायां स्वतनयपवनतनयमध्वस्याध्वानमेव स्थिरीचकार । **पस्पृशुः** भगवन्तं स्वहृदि स्थिरीचक्रुः । **विदांचकार** व्यजानात् । इन्द्रः प्रथमो विदांचकार । तदुपदेशेन तेऽपि

**उप० ॥ न्यमीमिषदा३इत्यधिदैवतम् । अथाध्यात्मम् । यदेतद्गच्छतीव च मनोऽनेन चै तदुपस्मरति । अभीक्ष्णं सङ्कल्पस्तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाभिहैनं सर्वाणि भूतानि संवाञ्छन्ति । उपनिषदं भो ब्रूहीति । उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः**

भा० ॥ एते देवाः प्रकीर्तिताः । एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः ॥ एतेषामवमो वह्निः परमो विष्णुरुच्यते । अन्तराले स्थितास्त्वन्ये ब्रह्माद्याः पूर्वमीरिताः ॥ अग्निः पश्चाद्यजानात्तदिन्द्रवाक्यात्ततोऽवमः । तस्माद्वि-ष्णवभिसम्बन्धात्पारावर्यं सुरेष्विदम् ॥ व्यद्योतयद्विद्युदादीन्कपिलाख्यस्तु यो हरिः । अक्ष्णोर्निमेषणं कृत्वा यः शेते क्षीरसागरे ॥ स एवैकः परं ब्रह्मेत्येव तस्योपदेशनम् । अधिदैवे तथाऽध्यात्मे यं मनो गच्छतीव च ॥ सम्यङ् न गच्छति क्वापि मनो येन स्मरत्यपि । सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते ॥ स विष्णुस्तद्वनं नाम ततत्वाद्वननीयतः । एवमेनं तु यो वेद भवेत्सर्वैरपेक्षितः ॥ एतच्छ्रुत्वा हरोऽपृच्छद्ब्रह्माणं पुन-रेव तु । विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माऽऽह तं पुनः ॥ विद्यावेद्यं तत्र प्रोक्तमास्थानं ते वदाम्यहम् । तपोदमस्वधर्मेषु ये स्थितास्तेषु तिष्ठति ॥ विद्यास्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः । वेदैतामेवमखिलां यो विष्णौ प्रतितिष्ठतीत्यादि ब्रह्मसारे । विद्युतः सूर्यादिप्रकाशान् । आ समन्ताद्व्यद्युतत्प्राकाशयत् । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"मिति वचनात् । "तमेव भान्त-मनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति च । न्यमीमिषदा । आ

---

विदांचक्रुरिति योजना । क्षणिकविद्युन्मात्रप्रकाशकत्वस्यातिमहिमसम्पादकत्वाभा-वाद्विद्युतः विशेषेण द्युतः प्रकाशमानानिति योगमाश्रित्यार्थमाह भाष्यकारो **विद्युत-स्सूर्यादिप्रकाशानिति** । आ इत्युपसर्गमनूद्य तस्यार्थमाह **आ समन्तादिति** । **अभि** अभितः विशेषेणेत्यर्थकोपसर्गद्वयपूर्वकस्य 'द्युती प्रकाशन' इति धातोरन्त-र्णीतणिजन्तत्वमभिप्रेत्यार्थमाह **प्राकाशयदिति** । 'श्रुतेरिवार्थं स्मृतिरन्वगच्छ'दिति

उप० ॥ सर्वाङ्गानि सत्यमायतनम् । यो ह वा एतामुपनिषदमेवं वेदापहत्य- पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति ज्येये प्रतितिष्ठति ॥ ४ ॥

इति तलवकारोपनिषत्समाप्ता ।

भा० ॥ समन्तान्निमीलिताक्षमभवत् । "स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिष्वि"ति वचनात् । पूर्णत्वाच्च आः । अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । सङ्कल्पकमित्यर्थः । सप्रतिष्ठां सायतनामुपनिषदं

---

काव्यकारेणाप्युक्तत्वात्स्मृतिसमाख्यया च विद्युत्पदं न विद्युन्मालवाचकमिति भावेन स्मृतिश्रुती पठति "**यदादित्यगत**"मिति । श्रुतौ **सर्व**मिति सामान्येनोक्तत्वा- द्विशेषार्थकस्मृतेरादौ ग्रहणम् । यद्यपि पञ्चरात्रवाक्ये **न्यमीमिषदा** इति वाक्यं क्षीर- सागरशायिनः कपिलाख्यहरेः प्रतिपादकमित्युदितम् । तथापि तदङ्गीकुर्वन्नेव भाष्य- कारो ब्रह्मशतवर्षपर्यन्तं वटपत्रशायिनि हरौ आ इत्युपसर्गार्थस्याभिव्याप्तिसिद्धेः सोऽ प्यर्थ इति भावेनाऽऽह **स वै किलाय**मिति । आ इत्यस्यार्थान्तरमप्याऽऽह **पूर्णत्वा**दिति । आ समन्ताद्विद्यमान इति व्युत्पत्त्या आशब्दो भगवत एव पूर्णत्ववाचको भवतीति भावः । अनेनैकैकमूर्त्या एकैकत्र स्थितस्य हरेस्सर्वगतत्वं नास्तीति शङ्का निरस्ता । "**यदेतद्गच्छतीव**"त्यत्र एतन्मनः गच्छतीवेति यत्तदनेन वै जीवान्तर्नियामकतया स्थितेनानिरुद्धेन । इवशब्देन च क्वचिन्न गच्छतीति सूचितम् । **वै**शब्देन 'अनिरुद्धः सर्वजीवो हृषीकेशो मनःपति'रिति स्मृतिप्रसिद्धिं सूचयति । सर्वे जीवाः यस्मात्प्रवर्तन्ते इति वा सर्वान्जीवयतीति वा सर्वजीव इत्यर्थः । सर्वजीवात्मक इत्यर्थकथनं तु "सर्वा- तिशायी कः सर्वाध्यक्षः सर्वेश्वरेश्वर" इत्युपक्रमवाक्येन "ब्रह्मरुद्राद्युत्कृष्टचेतनः । शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वर" इत्युपरितनवाक्येन च विरुद्धम् । **अभीक्ष्णं** बहुशः **सङ्कल्पः** सङ्कल्पात्मकं मन उपस्मरामीति यत् तद्'प्यनेन वै' इत्यर्थमभिप्रेत्याह भाष्यकारः । अभीक्ष्णमिति मनसो विशेषणीकृतसङ्कल्पपदेन इदमिदं करोमीत्यादि- रूपो यः सङ्कल्पः सोऽपि भगवदधीन इति सूचितम् । हेतुगर्भविशेषणानां 'तं देवं पितरं पतिं गुरुतम'मित्यादौ बहुलमुपलम्भात् । सङ्कल्पपदस्य नित्यपुल्लिङ्गत्वात् । सङ्कल्पो मन इत्यपि 'वेदाः प्रमाण'मितिवद्युज्यते । **सङ्कल्पक**मिति तु तात्पर्य-

भा० ॥ ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा । "निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यस्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चये"ति शब्दनिर्णये । "ऋग्यजुस्सामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामा-

---

कथनम् । तत्परं ब्रह्म **तन्नाम** तदिति नाम यस्य तत् तन्नाम 'तनु विस्तार' इति धातोरौणादिके डतुप्रत्यये कृते तदिति शब्दनिष्पत्तिः प्रसिद्धेति ह शब्देनाऽऽह श्रुतिः । **तत्** परं ब्रह्म **वनं** नाम 'वन सम्भजन' इति धातोः भजनीयत्वाद्वनशब्द-वाच्यमित्यर्थः । **"उपनिषदं भो ब्रूही"**ति हरेण पृष्टे उपनिषदेव वक्तव्या । **"तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतन"**मिति प्रतिष्ठायतनयोः कुतो निरूपणम् । अपृष्टपरिभाषणत्वप्रसङ्गात् । अतः प्रश्नवाक्येऽपि "सप्रतिष्ठां सायतना"मित्युपस्कर्तव्यमिति भावेनाऽऽह भाष्यकारः **सप्रतिष्ठा**मिति । एवं च भारतीभावं भारतीपतिरेव वेद नापर इति ज्ञेयम् । 'उपनिषदं भो ब्रूही'ति प्रश्नवाक्ये च वाक्यमात्रकथनस्य नायं प्रश्नः । चतुर्मुखमुखादेव स्वयोग्यसकल-वेदानां हरेणापि प्रागेव पठितत्वात् । अत **उप** वाक्यस्य समीपे वाक्यस्थपदानां समीपे च यन्नितरां वेदप्रतिपाद्यत्वेनाभिमतदेवादिभ्यः कर्मादिभ्यश्चातिशयेन महा-योगेन विद्वद्रूढ्या चेति यावत् । सीदति "षद्ऌ विशरणगत्यवसादनेष्वि"ति धातोर्वाक्यसमन्वयेन वाक्यानां पदसमन्वयेन पदानां च विषयतया तिष्ठतीति व्युत्पत्त्या सकलोपनिषत्प्रतिपाद्यं परं ब्रह्मैवोपनिषदित्युच्यते । तां च प्रकर्षेण प्रमास्येभिरिति व्युत्पत्त्या प्रमास्थिरीकरणहेतुभूततपआदिकरणैः सह प्रमाया मूला-धारभूतायतनशब्दवाच्यप्रमाणैस्सह ब्रूहीति प्रश्नवाक्यार्थः । अत एव **"उक्ता त उपनिषदि"**त्युक्त्वा **"ब्राह्मीं वाव त उपनिषदमब्रूमे"**ति श्रुतिः स्वयमेव ब्राह्मी-मित्युक्त्या प्रतिपाद्यब्रह्मविषयोऽयं प्रश्न इति सूचयति । एतत्प्रश्नपरिहाराय च प्रतिपाद्यब्रह्ममहिमरूपसकलेन्द्रियप्रेरकत्वसकलदेवोत्तमत्वादिगुणविशिष्टतया अस्या एव उपनिषद उक्तिकाले प्रतिपाद्यब्रह्मस्वरूपमप्युक्तमिति ज्ञेयम् । अवशिष्टप्रश्न-द्वयोत्तरं तूत्तरवाक्येनैवोच्यत इति विज्ञेयम् । **"उक्ता त उपनिषदि"**ति वाक्य-

यणं चैव पुराणं भगवत्परम् ॥ वेदा इत्युच्यते सद्भिः शिक्षाद्याः स्मृतय-स्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रय''मिति विद्यानिर्णये ॥ ४ ॥

यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान्परः ।
नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
तलवकारोपनिषद्भाष्यं सम्पूर्णम् ।

---

स्थस्य **उपनिषत्** उपनिषत्स्वरूपमुक्तव्युत्पत्त्या उपनिषत्पदवाच्यं ब्रह्मस्वरूपं ते उक्तमित्यर्थः । सत्यं सत्यवचनमिति भ्रमनिवारणायाऽऽह **सत्य**मिति मीमांसेति । **व्यस्तं मीमांसये**त्यत्र व्यस्तं व्यासेन प्रपञ्चेन सहितं यथा भवति तथा व्यस्तमि-त्यर्थः । प्रमाकरणानां पञ्चरात्रभारतमूलरामायणवैष्णवपुराणानां तपआदिनियम-स्वरूपप्रमापकवैष्णवस्मृतीनां च सत्त्वात्कथं त्रित्वेन पर्यवसानमित्यत आह **ऋग्यजु**रिति । वेदापेक्षिततपआद्यङ्गप्रतिपादकस्मृतीनां वेदस्वरूपतदर्थप्रमापकत्वेन वेदाङ्गभूतशिक्षादिष्वेवान्तर्भावेनोक्तं **शिक्षाद्याः स्मृतयस्तथा** । **अङ्गानी**ति ॥ ४ ॥

नियन्ता सर्वदेवानां निहन्ता सर्वरक्षसाम् ।
स मन्ता कमलाकान्तः समन्तात्सुखदोऽस्तु मे ॥

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिता
तलवकारोपनिषद्भाष्यटिप्पणी समाप्ता ।

॥ **श्रीकृष्णार्पणमस्तु** ॥

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमद्धाविसमीरवादिराजगुरुभ्यो नमः ॥

श्रीमद्वादिराजपूज्यचरणविरचिता

# तैत्तिरीयोपनिषद्भाष्यटिप्पणी ।

---

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

॥ श्रीगुरुभ्यो नमः । हरिः ॐ ॥



उप० ॥ ॐ **शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो ।**

भा० ॥ ॐ ॥ सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् । सैर्वेदैर्वैरीड्यं विष्ण्वाख्यं सर्वदैमि सुप्रेष्ठम् ॥ १ ॥ आदित्यसंस्थिताद्विष्णोश्श्रुत्वा ब्रह्म यथा हरिम् । तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः ॥ विष्णुमस्तौत्तथा प्राह शन्नोमित्रादिका श्रुतिः । यदुवाच हरिस्सूर्यमण्डलस्थः परः पुमान् ॥

---

ॐ ॥ सुमतिभिरनुमेयं शुभ्रकायं सखायं सुखमयमनपायं मुक्त्युपायं विमायम् । नृहयमहममेयं ध्येयमाम्नायगेयं सदयमसदजेयं श्रीसहायं भजेयम् ॥ **एवं वचस्सुबहुदर्शिष्वित्यत्र** सुबहुदर्शिषु **एवं च** परोक्तानुवादरूपमेव वचः वर्तते । "तं व्याससूनुमुपयामि गुरुं मुनीना"मित्यादौ व्यासकृतभागवतग्रन्थे कृतस्तुत्यादिनमस्कारादीनां तत्रतत्रानुवाददर्शनादिति भावः । **शं नो मित्रः शं वरुण** इत्यत्र वरुणो मित्रो देवो नः शं प्रति भवति तथा भवत्विति योजना । **त्वमेव प्रत्यक्षं ब्रह्मेति** वदता साक्षात्परंब्रह्माप्रत्यक्षमेव । श्रवणादिकं विना द्रष्टुमशक्यत्वस्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतौ निश्चितत्वात् । अतो ब्रह्मणः स्वयं मुख्यतः सन्निहितत्वेन तव विष्णोर्मुख्यतः प्रतिमात्वेन रङ्गनाथादिप्रतिमादौ त्वमेव रङ्गनाथ इत्युक्तिर्यथा तथा वायोरपि प्रत्यक्षब्रह्मत्वोक्तिः । नतु ब्रह्माभेदेन, प्रत्यक्षाप्रत्यक्षयोरैक्यायोगादिति सूचितम् । **त्वमेव**

उप० ॥ **त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिश्शान्तिश्शान्तिः ॥ १ ॥ ॐ शीक्षां व्याख्यास्यामः । वर्णस्स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तश्शीक्षाध्यायः॥ २ ॥ स ह नौ यशः। स ह नौ ब्रह्म-**

भा० ॥ ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु । शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ॥ भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः ॥ सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीमित्यादि यजुस्संहितायाम् । भृगुवाक्यतया वायुनमस्कारादिकं हरिः ॥ प्रोवाच ब्रह्मणे चैवं वचस्सुबहुदर्शिष्विति च ॥ १ ॥ वरणीयो वर्णः । स्वरतेस्तु स्वरः । मानात्त्राता मात्रा । बलरूपः । समश्च सर्वरूपेषु । सन्ततश्च ॥ वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् । विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् ॥ २ ॥ नारायणादिरूपाणि

---

**प्रत्यक्षं ब्रह्म** त्वमेव प्रत्यक्षं ब्रह्मेति वदिष्यामि । **ऋतं** 'ऋ गता'विति धातोः कर्तरि क्तप्रत्यये कृते गत्यर्थानां च ज्ञानार्थत्वाद्यथार्थज्ञानवदित्यर्थः । **सत्यं** 'षद्लृ विशरणगत्यवसादनेष्वि'ति धातोः सत्=ज्ञानं श्रुतिनिर्दिष्टं यं कर्तृत्वे प्रवर्तकत्वे च (कृतौ प्रवृत्तौ च) प्रवर्तकं यस्य तत्सत्यमित्यर्थः । ज्ञानस्येच्छाद्वारा प्रवृत्तिकारणत्वस्य सिद्धत्वादिति भावः । तादृशमहामहिम्नस्तव स्तुतिरूपवचनं **मा** इत्यध्येतारं मामवतु ॥ मम प्रवक्तारं गुरुं मध्यवर्तिनमित्यर्थः । गुरोरर्थं च श्रुत्वा शिष्यस्यैव साक्षादध्येतृत्वाच्छिष्यः स्वकीयपाठेन गुरोरभिरक्षणमपि प्रार्थयते । "वक्तुर्दशगुणं फलमि"ति वचनात् शिष्यप्रार्थनामात्रेणापि गुरोः फलं भवतीति भावः । द्विरुक्तिरादरार्था ॥ १ ॥ **शीक्षां व्याख्यास्याम** इत्यत्र "तृतीयोऽतिशय" इति वचनाच्छिक्षायास्सामञ्जस्यवचनाय शीक्षामित्युक्तम् । यद्यप्युदात्तानुदात्तस्वरितप्रचयाख्याः स्वरा अपि मात्रा एव । तथाऽपि वक्ष्यमाणधर्मान्तरविवक्षया मात्रायाः पृथग्ग्रहणम् । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः ॥ त्रिमात्रः प्लुत इत्यर्थः । स्पृष्टेषत्स्पृष्टादिरूपः प्रयत्नः । बहुवर्णात्मकवाक्यं वर्णपरम्परारूप-

उप० ॥ **वर्चसम् । अथातस्सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधि-
करणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता
महासꣳहिता इत्याचक्षते ॥३॥ अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरु-
त्तररूपम् । आकाशस्सन्धिः । वायुस्सन्धानम् । इत्यधिलोकम्॥४॥अथा-
धिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपस्सन्धिः ।
वैद्युतस्सन्धानम् । इत्यधिज्यौतिषम् ॥५॥ अथाधिविद्यम् । आचार्यः
पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् ।**

भा० ॥ लोकादिषु च पञ्चसु । अनिरुद्धावसानानि ध्येयानि चतुरात्मना । वासु-
देवादिकान्येव तानि पूर्वोत्तरार्णयोः । संहितायास्तथा सन्धौ सन्धाने चापि
कृत्स्नशः ॥ यो वेदैतानि रूपाणि सर्वभोगसमन्वितः । प्राप्नोति वैष्णवं
स्थानं मुक्तस्स्वर्गाभिधं परम् ॥३—८॥ यो विश्वरूपो भगवांश्छन्दसामधिपो

---

तया सन्तान इत्युच्यते । वर्णादिषट्कस्य तन्नियामकरूपषट्कस्य च ज्ञानाभावे वर्णोच्चारणं व्यर्थं स्यात् । मध्येमध्ये स्खलनं च स्यात् । अत इयं शिक्षा प्राथमिकेति भावः ॥ २ ॥ **शन्नो मित्र** इत्युपनिषदारम्भे मङ्गलस्य कृतत्वात्**पुनस्सहनौ यश** इति मङ्गलाचरणं किमर्थमिति चेत्सत्यं विद्यानां बाहुल्यात्प्रतिविद्यं मङ्गलाचरणं कार्यमिति सूचनायाथा**तस्सꣳहिताया** इति विद्यारम्भेऽपि पुनर्मङ्गलं कृतमिति ज्ञेयम् । **महमित्रादिर्नौ** यशो दिशत्वित्यर्थः ॥ "ह्रेत्यनेन यशोदानशक्तेः प्रसिद्धतामाह । **अथातः संहिताया** इत्यत्र **अथ** अध्ययनाङ्गशिक्षानिरूपणानन्तरमतः संहितायाः "अग्निमीळे पुरोहितमि"त्यादावग्न्यादिवर्णद्वयात्मकसंहितायाः पूर्वोत्तरवर्णयोस्तत्सन्धित्सायाः सन्धेश्च ज्ञानस्यैकवर्णज्ञानादप्यधिकफलसाधनत्वात्तस्यास्संहिताया **उप** समीपे निषीदतीत्यु**पनिषदं** तत्सम्बन्धिरहस्यविद्यां व्याख्यास्यामः । एवं ज्ञानेऽक्षरद्वयात्मकसंहितोच्चारणं स्पष्टमक्लिष्टं च भवतीत्यतोऽस्या विद्याया उत्तरविद्याङ्गत्वमिति भावः । **चतुरात्मना । वासुदेवादिकान्येवेत्यत्र चतुरात्मना** वासुदेवाद्यनिरुद्धान्तचतुरात्मना वासुदेवादिकान्येव च पूर्वोत्तरवर्णयोस्तत्सन्धौ सन्धाने च ध्येयानीति योजना । अत्रायं विवेकः । सन्धिदेवताज्ञाने सन्ध्यक्षरोच्चारणे सौष्ठवं भवति । अधिलोकादिसन्ध्यक्षरज्ञाने इह लोके परलोके च

उप० ॥ इत्यधिविद्यम् ॥ ६ ॥ अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ॥ ७ ॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥ इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ८ ॥ तृतीयोऽनुवाकः ॥ ३ ॥ यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् ।

भा० ॥ हरिः । छन्दोभ्योऽमृतरूपेभ्यस्सुव्यक्तस्तदुपासनात् । मेधावी तत्वविज्ञानी भूत्वा क्षिप्रं विमुच्यत इति च ॥ वेदावासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः ।

---

सुखं भवति । अधिज्यौतिषं सन्ध्यक्षरज्ञाने ब्रह्मवर्चसं भवति । अधिविद्यं सन्ध्यक्षरज्ञाने शिष्याचार्यादिघटना भवति । अधिप्रजं सन्ध्यक्षरज्ञाने सन्तानाभिवृद्धिर्भवति । अध्यात्मं सन्ध्यक्षरज्ञाने सुष्ठूच्चारणशक्तिर्भवति । अत इदमप्यवश्यं ज्ञातव्यमित्येतदेवाभिप्रेत्य श्रुतिः सन्धीयते प्रजया पशुभिरित्यादिना फलमप्याह ॥ ३–८ ॥ छन्दोभ्योऽध्यमृतात्सम्बभूवेत्यत्रामृतात् अमृतेभ्यो नित्येभ्यो वेदेभ्योऽधि अधिकतया सर्वोत्तमत्वेन सम्बभूव सम्यगाविर्बभूव । अमृतादित्येकवचनं छन्दसां भगवद्विषये एकवाक्यताद्योतनार्थम् । अत एव विश्वरूप इत्युक्तम् । विश्वस्मिन्निन्द्रादौ रूपमन्तर्यामिरूपं यस्येति विग्रहः । तथा चेन्द्रादिसूक्तान्यपि 'गुहाशयायैव न देहमानिन' इति स्मृतेरिन्द्राद्यन्तर्यामिविषयाणीत्येकवाक्यतेति भावः । स इन्द्रो मेधया धारणया बुद्ध्या मा मां स्पृणोतु सम्बध्नातु । 'स्पृ स्पर्शन' इति धातोः विकरणव्यत्ययात् वृणोरिवतिवत् स्पृणोरिवति रूपं भवतीति ज्ञेयम् । मेधाऽपि छन्दोविषयैव भवेदिति सूचनाय छान्दसप्रयोगः । अत एवाऽऽह श्रुतिः । अमृतस्य धारणो धारको भूयासमिति । मे शरीरं विचर्षणं वि विशेषेण 'चर गतिभक्षणयो'रिति धातोर्गत्यर्थानां च ज्ञानार्थत्वात् चर्षणं ज्ञानानुकूलं भवतु । मेधावित्वेऽपि व्याध्यादिना शरीरदौर्बल्ये ज्ञानायोगादिदं प्रार्थनम् । मे जिह्वा मधुमत्तमा अतिशयेन मधुवचनवती भूयात् । गुर्वादिषु प्रियवचनाभावे ज्ञानायोगादिदं प्रार्थनम् ।

**उप० ॥ जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयाऽपिहितः । श्रुतं मे गोपाय ॥९॥ आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिस्सह स्वाहा ॥ १० ॥ आ मा यन्तु ब्रह्मचारिणस्स्वाहा । वि मा यन्तु ब्रह्मचारिणस्स्वाहा । प्र मा यन्तु ब्रह्मचारिणस्स्वाहा । दमा यन्तु ब्रह्मचारिणस्स्वाहा । शमा यन्तु**

भा० ॥ भगष्षड्गुणपूर्णत्वाद्बहुरूपत्वतो विभुः । सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् । मुच्यते नात्र सन्देहस्सर्वभोगैश्च पू(यु)ज्यत इति प्रकृते ।

---

मयि छन्दसामभावे मां प्रति, त्वया कथं छन्दोविषयकमेधाप्रार्थनं क्रियत इत्यत उक्तं **ब्रह्मणः कोशोऽसी**ति । "बृह जातिजीवकमलासनशब्दराशिष्वि"ति धातोः **ब्रह्मणो** वैदिकशब्दराशेः कोशोऽसि । मेधया **अपिहितः** निगूहितोऽसि । व्याख्यानकाले मेधामाविर्भावयसि । अन्यदा निगूह्य कोशान्तस्स्थितधनवन्न प्रकाशयसीति भावः ॥ ९ ॥ ब्रह्मचार्यभावे व्याख्यानासम्भवात्तत्प्रार्थनप्रकारमाह । **आमायन्त्वि**ति । ब्रह्मचारिणो **मा** मां प्रति **आ** समन्तात् **आयन्तु** आगच्छन्तु । "इणुगतावि"ति धातोर्लोटि प्रथमपुरुषवचनमिदम् । **विमायन्तु** वि विशिष्टतया कुलगोत्रादिभिरन्योन्यं विशिष्टतया च आयन्तु । "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । अनार्यकायानृजवे शठाय न मां ब्रूया ऋजवे ब्रूहि नित्यमि"ति श्रुतेरकुलीनेषु वेदोपदेशस्यानुचितत्वादेतत्प्रार्थनम् । "शमो मन्निष्ठता बुद्धे"रिति वचनाच्छ**मः** विष्णुविषकनिष्ठा । विष्णुविषयक निष्ठाभावे तं प्रति वेदोपदेशायोगादिदं प्रार्थनम् । "नाभक्ताय कदाचने"ति गीतोक्तेः । "दम इन्द्रियनिग्रह" इति वचनात् **दमा** इन्द्रियनिग्रहवन्तः । "इदं ते नातपस्काये"ति गीतायामेवोक्तत्वादिदं प्रार्थनम् । **जने** जनसमुदाये **यशः** कीर्तनात् यशो भवानि यशसि स्थितो भवानि "अस भुवी"ति धातोर्लोट्युत्तमपुरुषैकवचनमिदम् । **वस्यसः** वस्तुं योग्यं वस्यः सुखं तस्य वस्यसः सुखविषये इत्यर्थः । **श्रेयान्** श्रेष्ठः **असानि** अतिशयितसुखवानसानीति भावः । स्वस्य सुखाभावेऽप्युपदेशायोगादेतत्प्रार्थनम् । **भग** षड्गुणपूर्ण **तं त्वा** भगवन्तं त्वामहं

उप० ॥ **ब्रह्मचारिणस्स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि-स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा ॥११॥ यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायंतु सर्वतस्स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ १२ ॥**

भा० ॥ आवहन्ती चिरं सर्वभोगान्या श्रीस्सनातनी । तां मय्यावह गोविन्द सुशिखण्डोपशोभितामिति च ॥ अनु० ४ ॥ ९—१२ ॥ भूरादिव्याहृती-

---

**प्रविशानि** शिष्येषु प्रवचनेन मुक्तो भवानीति भावः । त्वय्येवाविष्टचित्तो भवानीति वा । हे भग स त्वं **मा** मां **प्रविश** मयि सन्निहितो भव । "न ऋते त्वत्क्रियत" इति श्रुतेः । **निभग** नितरां भाग्ययुक्त नारायण **सहस्रशाखे** सहस्रावतारे तस्मिन्त्वयि **मृजे** "मृजुशुद्धा"विति धातोर्दोषाणां प्रक्षालनवानसानीत्यर्थः । एतैर्मन्त्रैः प्रत्येकमग्निमुखे आहुतिर्देयेति भावेन सर्वत्र स्वाहेत्युक्तम् ॥ ११ ॥ "क्षुधितानां दुर्भगानां कुतो योगसमाधय" इति वचनादन्नाभावे चित्तसमाधानायोगादन्नदायिन्या लक्ष्म्याः प्रार्थनप्रकारमाह **आवहन्तीति**। चीरं **चिरतरं** मम **वासांसि** पटान्यन्नपाने च सर्वदा **आवहन्ती** "वह प्रापण" इति धातोः आ सम्यक् प्रापयन्ती, 'तनु विस्तार'इति धातोर्**वितन्वाना** विशेषेण विस्तारयन्ती या महालक्ष्मीर्यतः एतादृशी ततः कारणात् **लोमशां** सुशिखण्डोपशोभितां तां श्रियं **मे** मयि **आवह** आधेहि पशुभिरित्युपलक्षणम् । वासोभिरन्नपानादिभिश्च सहेत्यपि द्रष्टव्यम् । अनेनापि मन्त्रेणाऽऽहुतिर्देयेति भावेन स्वाहेत्युक्तम् ॥ १० ॥ शिष्या अप्यप्रयत्नेनाऽऽयन्त्विति भावेनाह **यथाऽऽप** इति । पर्वतोन्नतदेशेनाऽऽपः यथाऽऽयन्ति । मासाः अहानि जरयतीति **अहर्जरः** संवत्सरः तं यथाऽऽयन्ति, एकैकस्मिन्वत्सरे द्वादश द्वादश मासा अनायासेन गच्छन्ति । एवं हे धातर्ब्रह्मचारिणो मां **सर्वतः** अष्टदिग्भ्योऽप्यायन्तु । **प्रतिवेशः प्रति** मां प्रति **वेशः** विशत इति व्युत्पत्त्या वेशः प्रवेशयोग्योऽसि! मम योग्यजीवत्वात्तव दयालुत्वाच्च मां प्रविश्य **नय** नियमय नियन्तुं योग्ये मयि सतीति भावः । "योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयती"ति स्मृतेः । **प्रमा भाहि प्र** प्रकर्षेण **मा** मां **भाहि** । "भा दीप्ता"विति धातोर्भासय ।

उप० ॥ **भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ॥ १३ ॥ भूरिति वा अयं लोकः । भुव इत्यन्त-**

भा० ॥ भिस्तु वाच्यं मूर्तिचतुष्टयम् । अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः ॥ वासुदेवो महोनामा त्वनिरुद्धश्शिरो मतः । भूर्नामाऽथ भुवोनामा बाहू प्रद्युम्न ईरितः ॥ सङ्कर्षणस्सुवर्नामा पादौ तस्य महात्मनः । अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते ॥ निर्विशेषोऽपि भगवान्सङ्ख्यामात्रविशेषतः । लोकज्योतिःप्राणवेदेष्वेकस्स पुरुषोत्तमः ॥ प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः । महीयते महति च स्वयं स भगवान्हरिः ॥ पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते । नामप्रवृत्तिहेतुत्वान्नामलोकादिकं

---

ब्रह्मवर्चसवन्तं कुर्विति भावः । "उद्दीप्यस्व जातवेद"इति श्रुतेः **प्र मा पद्यस्व प्र** प्रकर्षेण **मा** मां **पद्यस्व** आप्तो भव । इतरेभ्योऽधिकसन्निधानं कुर्वित्यर्थः ॥ १२॥ इदानीं सकलविद्याभ्यासकाले शुध्द्यर्थं प्रागवश्यं वक्तव्यां व्याहृतिविद्यामाह **भूर्भुवःसुवरि**त्यादिना । "सव्याहृतिं सप्रणव"मिति हि श्रुतिः । प्रतिपाद्यदेवताज्ञानपूर्वकं मन्त्रोऽभ्यसनीय इति भावेनाह भाष्यकारो **भूरादिव्याहृतीभि**रिति । **भू**रित्यनेनानिरुद्धः कथ्यते । **भुव** इत्यनेन प्रद्युम्नः । **सुव**रित्यनेन सङ्कर्षणः । **मह** इत्यनेन वासुदेव इति विवेकः । तासां मध्ये **चतुर्थीं** मह इति व्याहृतिं महत् चमसं चमत्कारो, यस्य स महाचमसः **परमात्मा तस्य सम्बन्धी माहाचमस्यः** ब्रह्मा **प्रवेदयते** इतिहासादितोऽप्युत्तमत्वात् महागुणप्रतिपादकत्वात्सर्वगुणपूर्णत्वप्रतिपादकत्वाच्च चतुर्थ्या ब्रह्मैव सम्यगुपास्त इति भावः । **मह** इति व्याहृति प्रतिपाद्यं, **ब्रह्म** सर्वगुणपूर्णं परं ब्रह्म, । **स** वासुदेव **आत्मा** मध्यदेहः । अङ्गी नारायणः **अन्या देवताः** अनिरुद्ध प्रद्युम्नसङ्कर्षणाख्याः नारायणस्या**ङ्गानि** शिरः पाणिपादाख्याङ्गानि । अनिरुद्धः शिरः, प्रद्युम्नो बाहू, संकर्षणः पादौ । एवं चतुर्मूर्त्यात्मको नारायण इत्यर्थः । प्रत्येकं मन्त्रार्थाः वासुदेवाद्या भगवदङ्गतया ध्येयाः, समुदितमन्त्रप्रतिपाद्यो नारायणस्त्वङ्गितया ध्येय इति भावः ॥१३॥ इदानीं भूरादिवाच्यानिरुद्धादिदेवतानां सकलजगदाधारत्वद्योतनाय चतुर्धा चतुर्धा स्थानान्याह ।

उप० ॥ **रिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वा व सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वा व सर्वाणि ज्यो-**

भा० ॥ हरेः ॥ अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः । ईक्षणादन्तरिक्षं चाथादित्यस्थोऽदितेस्सुतः ॥ अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् । चन्द्र आह्लादरूपत्वादृगर्च्यत्वाज्जनार्दनः ॥ यजुर्याज्यस्वरूपत्वात्साम चासौ समत्वतः । बृहत्त्वाद्ब्रह्म वेदानां समुदायेऽखिले स्थितः ॥ तत्सम्बन्धाद्वेदराशिर्ब्रह्मशब्देन कीर्तितः । प्रकृष्टनयनात्प्राणोऽपानोऽवाङ्नयनाद्धरिः ॥ विविधं नयनाद्व्यानस्सोऽन्नं सर्वोपजीव्यतः । एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः ॥ महाचमसनामाऽसौ यस्मादतिचमत्कृतिः । माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः ॥ एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः ।

---

**भूरिति वा अयं लोक** इत्यादिना । **भूर्नाम**कोऽनिरुद्धः **अयं लोको वै** एतल्लोकस्थितत्वा "लोकृ दर्शन"इत्यस्माद्धातोस्सर्वज्ञत्वात्समीपगतत्वाच्च अयंलोकशब्दाभ्यां वाच्यो वै । **भुवः** भुवर्नामप्रद्युम्नस्वरूपं अन्तरिक्षस्थितत्वादन्तरिक्षम् । सुवर्नाम संकर्षणस्वरूपं प्राणे स्थितत्वात्प्रकाशरूपत्वाल्लोकः । **मह** इति वासुदेवः आदित्यस्थितत्वादादित्यः । एवं रूपचतुष्टयैर्लोकत्रयभासकमादित्यं च प्रवर्तयत्ति । एवं ध्यात्वा त्रिलोक्यामैहिकं सुखं लब्ध्वा **परलोकगमनसमये सूर्ये** च सङ्गत्य स सुखी भवतीति । एवं **भूरिति** शब्दवाच्योऽनिरुद्धः **अग्निः** अग्निस्थितत्वादङ्गभूतजगन्नेतृत्वाच्चाग्निशब्दवाच्यः । **भुवः** भुवःशब्दवाच्यः प्रद्युम्नो वायुः "वयगता"वितिधातोर्जगत्प्रवर्तकत्वाद्वायुगतत्वाच्च वायुशब्दवाच्यः । **सुवः** सुवश्शब्दवाच्यः सङ्कर्षणः **आदित्यः** आदित्यप्रवर्तकत्वाददितिसुतत्वाच्चादित्यशब्दवाच्यः । **महः** महश्शब्दवाच्यो वासुदेवः **चन्द्रमाः,** चन्द्रगतत्वात् 'चदि आह्लादन' इति धातोः सुखकरत्वाच्चन्द्रमाः चन्द्रमश्शब्दवाच्यः । एवं ध्यातुरग्निवाय्वादयस्सर्वे अनुकूला भवन्तीति भावः । भूर्भूश्शब्दवाच्योऽनिरुद्धः ऋग्वेदगतत्वात् 'ऋच पूजाया'मिति धातोरर्च्यत्वाच्च ऋक्शब्दवाच्यः । प्रत्यृचं बहुरूपत्वादृच इति बहुवचनम् । **भुवः** भुवःशब्दवाच्यः प्रद्युम्नः सामवेदगतत्वात् सर्वरूपेषु समत्वाच्च सामशब्दवाच्यः ।

उप० ॥ तीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वा व सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वा व सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा ।

भा० ॥ स एव ब्रह्मवित्तस्मात्पूज्यते मुक्तिगोऽपि सन् ॥ सर्वदेवैरतितरां यस्सम्यक्षोडशात्मविदिति व्याहृतितत्वे ॥ तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे सुवरिति प्रतिष्ठे । द्वे प्रतिष्ठे । द्वे एते अक्षरे इत्यादिश्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनैतां प्रवेदयत इति विशेषः । भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः । सुवस्सुबलरूपत्वान्महः पूर्णत्वतो विभुः ॥ तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् । स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः ॥ तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः । वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः ॥ स एव सर्ववेदोक्तस्सर्वविद्यासु चेश्वरः । प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः ॥ इतिहासः पुराणं च पञ्चरात्रं च सर्वशः । सम्यग्व्याहरणाद्विष्णोश्श्रुता व्याहृतयस्त्विति ॥ सर्ववेदोक्तसर्वस्वव्याहृते-

---

साम्नां ऋगधिरूढत्वा'हचस्सामानी'ति श्रुतेः क्रमोल्लङ्घनम् । प्रतिसाम बहुरूपत्वाद्बहुवचनम् । सुवस्सङ्कर्षणो यजूंषि यजुर्वेदस्थितत्वाद्याज्यत्वाच्च यजुश्शब्दवाच्यः । बहुवचनं तु पूर्ववद्द्रष्टव्यम् । महः वासुदेवः ब्रह्म वेदसमुदाये स्थितत्वाद्गुणबृंहितत्वाच्च ब्रह्मशब्दवाच्यः । एवं ध्यातुर्वेदाः फलप्रदा भवन्तीति भावः । एवं भूःशब्दवाच्योऽनिरुद्धः प्राणे स्थितत्वात् 'णीञ् प्रापण' इति धातोः प्रकृष्टान् ब्रह्मादीन्ना समन्तान्नयतीति व्युत्पत्त्या च प्राणशब्दवाच्यः । भुवर्नामकप्रद्युम्नः अपानः अपानवायुगतत्वात्सर्वजगदयं स्वस्याधस्तादा सम्यक् नयतीति व्युत्पत्त्या चापानशब्दवाच्यः । सुवर्नामकस्सङ्कर्षणो व्यानाख्यवायुगतत्वाद्विविधतया जगदा समन्तान्नयतीति व्युत्पत्त्या च व्यानशब्दवाच्य इत्यर्थः । महःशब्दवाच्यो वासुदेवोऽन्नगतत्वा "दद्यतेऽत्ति"चे श्रुतेस्सर्वोपजीव्यत्वाच्चान्ननामेत्यर्थः । एवं ध्यायन् चिरं जीवो यथेष्टान्नवान्लोकोपजीव्यश्च भवतीति भावः । ता एता अनि-

उप० ॥ **चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ १४ ॥ स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन**

भा० ॥ व्याहृतित्वमु । विशेषेणाहरन्तीमं विष्णुमित्यथवा स्मृता इति व्याहृतिसारे ॥ १३,१४ ॥ य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः । प्रद्युम्नस्तालु-मध्यस्थो लम्बिन्यामिन्द्रनामकः ॥ व्याख्यस्सुपर्णरूपत्वात्केशान्ते वर्तते तु यः । सङ्कर्षणस्सुपर्णात्मा वासुदेवो व्यपस्स्मृतः ॥ यस्माद्व्यपगतस्थाता जगति प्रलये विभुः । अशीर्षककपालेऽसौ कपालादुपरिस्थितः । अनि-

---

रुद्धादिदेवताः पुनश्चतस्रः पुनश्चतुर्धा पुनश्चतस्रः पुनश्चतस्र इति षोडशधा भूत्वा सर्वं जगत्प्रवर्तयन्ति । यो ब्रह्मा **ताः** व्याहृतिप्रतिपाद्यदेवताः **वेद** अविच्छिन्नतया वेद स एव ब्रह्म वेद । **अस्मै** मुक्ताय ब्रह्मणे सर्वे देवा **बलिं** पूजामावहन्तीत्यर्थः । अनेन तदुपनिषद्विद्योक्तोपास्तौ ब्रह्मण एव मुख्याधिकारित्वमिति सूचितम् ॥१४॥ अधुना प्रकारान्तरेण जीवनियामकतया परमात्मनः स्थितिप्रकारमाह । **स य एषोऽन्तर्हृदय आकाश इति** । अन्तर्हृदये प्रसिद्धः स एष आकाशोऽस्ति **मनोमयो** ज्ञानमयः । **हिरण्मयः** हिनोति भजकमिति व्युत्पत्त्या हिरुक् सुखं तन्मयः । **अमृतः** जीवमरणेऽपि मरणरहितः । अयमनिरुद्धः **तस्मिन्**हृदयाकाशे जीवप्रेरकतया तिष्ठति । **तालुके** उत्तराधरतालुके **अन्तरेण** मध्ये **य** एष धातुविशेषेण **स्तन** इवावलम्बते **इन्द्रस्य** इन्द्रनामकप्रद्युम्नस्य **योनिः** स्थानं भुक्तान्नस्योदरान्तः प्रेषणाय प्रद्युम्नस्तत्र तिष्ठतीति भावः । यत्र **केशान्तः** केशमूलप्रदेशः वर्तते तत्र विशब्दवाच्य पक्षिसदृशरूपवत्त्वाद्विनामकसङ्कर्षणस्तिष्ठतीति । शिरसि व्याप्तकेशोज्जीवनाय स्वपक्षौ विस्तार्य पक्षिरूपेण तिष्ठतीति भावः । **व्यपः** विनामकपक्षिरूपत्वादपगतदोषत्वाच्च व्यपनामको वासुदेवः **अशीर्षकपाले** शीर्षभागकपालभिन्ने, तद्यत् कपालोपरिगतस्थानं तत्र पूर्ववत् सकलरक्षणाय तिष्ठतीत्यर्थः ॥ १५ ॥ **भूरिति वा अग्निरि**त्यादिनोक्ताग्न्यादिषोडशाधिष्ठानेषु सामानाधिकरण्येनोक्त्या ऐक्यशङ्कां निवारयन् चतुर्णां स्थानान्तरेऽप्युपास्तिमाह । **भूरित्यग्नौ प्रतितिष्ठतीति** । **"भूर्नामा हुताशे संव्यवस्थित"**इति भाष्योक्तेः । प्रागुक्ताग्निर्गार्हपत्यः । अत्रोक्ता-

उप० ॥ **इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपो ह्य शीर्षकपाले ॥ १५ ॥ भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति**

भा० ॥ रुद्रस्तु भूर्नामा हुताशे संव्यवस्थितः । प्रद्युम्नो भगवान्वायौ भुव इत्येव कीर्तितः । सङ्कर्षणस्सुवर्नामा सूर्ये तिष्ठति केशवः । महोनामा वासुदेवो ब्रह्मणिस्थश्चतुर्मुखे । स वासुदेवस्स्वाराज्यं व्याप्यास्मिन्मनसस्पतौ । अनिरुद्धे च संव्याप्तः ततो वागादिनां पतिः । वागादिषु स्थितो नित्यं भवत्येव-जनार्दनः । स्वव्यापी च जगद्व्यापी नित्यैश्वर्यात्स ईश्वरः । आकाशवद्व्याप्त-

ग्निस्त्वाहवनीयः । वायुश्चतुर्मुखपंक्तौ पठितत्वान्मुख्यवायुः । प्रागुक्तस्त्वमुख्यः । अतो न पौनरुक्त्यम् । अत्र स्पष्टमधिकरणत्वोक्त्या "सप्तसु प्रथमे"त्यनुशासनात्प्रागुक्तप्रथमा सप्तम्यर्थ इति सूचितम् । ब्रह्मा चतुर्मुखः आदित्यो द्वादशादित्येष्वेकः, अतो न पौनरुक्त्यम् । परिच्छिन्नब्रह्मादिस्थितत्वेन वासुदेवादेरपि परिच्छिन्नत्वभ्रमनिवारणाय तस्य महिमानमाह । **आप्नोतीति ॥ स्वाराज्यं** स्वराट् चक्रवर्ती तत्सम्बन्धि जगत् स्वाराज्यं **आप्नोति** व्याप्नोति । **मनसस्पतिं** मनोभिमानिनमनिरुद्धं च व्याप्नोति । एवं प्रधानेन्द्रियमनोभिमानिव्याप्तत्वात् । **वाक्पतिः** वागिन्द्रियस्यापि पतिः, **चक्षुष्पतिः** चक्षुरिन्द्रियस्यापि पतिः, श्रोत्रेन्द्रियस्यापि पतिः, न केवलमेतावत् किंतु विज्ञानपतिश्च विज्ञानतत्वाभिमानिनोस्सरस्वतीब्रह्मणोरपि पतिरित्यर्थः । **स्वव्यापी च जगद्व्यापी**त्यत्र एतेष्विन्द्रियेष्वाविष्टस्वांशव्यापित्वमप्यस्तीति भावेन **स्वव्यापी**त्युक्तम् ॥ १६ ॥ **तद्ब्रह्म आकाशशरीरं** आकाशवद्व्याप्तशरीरम् । **सत्यात्म सत्यः** साधुपूर्णगुण एव **आत्मा** देहो यस्य तत्सत्यात्म **प्राणं** मुख्यप्राणं **आ** सम्यक् रमयतीति प्राणारामम् । एतद्घटनायार्थान्तरमप्याह । **बलानन्दस्वरूपवा**निति । **प्र** प्रकर्षेण **अनं** चेष्टा बलं वा यस्मात्प्राणं आ सम्यक् रमणमानन्दो यस्येति प्राणाराममित्युक्तं भवति । एवं च स्वयं बलवत्वादानन्दवत्वाच्च प्राणस्यापि बलं दत्वा सर्वेभ्योऽपराजितं च कृत्वाऽऽनन्दयतीति भावः । **शान्ति** सुखस्यान्तः सर्वेषां सुखगणनायां "यतो वाचो निवर्तन्ते"इत्यन्तिमवाक्योक्तनिरवधिकत्वमस्यास्तीति शान्तीत्यर्थः । शत्रून्श-

उप० ॥ **मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति ॥ १६ ॥ आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मनआनन्दम् । शान्ति समृद्धममृतम् । इति प्राचीनयोग्योपास्व ॥ १७ ॥**

भा० ॥ देहस्सत्यात्मा गुणपूर्तितः । वायोर्विशेषरमको बलानन्दस्वरूपवान् । ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः । अन्तगत्वात्स्वतः पूर्तेस्समृद्धं तत्प्रकीर्तितम् । इत्युपास्य प्राथमिको योग्यस्त्वं मदुपासने । प्राधान्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखमिति ब्रह्मसारे ॥ अनु० ॥ ६ ॥ इति

॥ श्रीः ॥

---

मयतीति व्युत्पत्या च शान्तिशब्दवाच्यं परं ब्रह्मैवेति भावेनाह **अन्तगत्वादिति** । **सम्** सम्यक् परनिरपेक्षया ऋद्धं पूर्णं समृद्धम् । **अमृतं** मरणरहितम् । **प्राचीनयोग्य** अधिकारिषु प्रथमयोग्य ब्रह्मन् । इत्युपास्वेति ब्रह्माणं प्रति भगवानुपदिशतीत्यर्थः ॥ १७ ॥ इति

॥ श्रीः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

यावदुपलब्धं तावदेव मुद्रितम् । समग्रा टिप्पणी अस्यास्तैत्तिरीयोपनिषदः येषां केषांचित्सविधेऽस्ति चेत् ते संप्रेष्य अनुगृह्णीयुरित्याशास्त इयं समितिः ॥

# श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितेः पोषकाः

## अष्टमठाधीशाः

| | | | |
|---|---|---|---|
| १ | श्री पुत्तिकामठाधीश | श्री१०८ श्री सुधीन्द्रतीर्थ श्रीमच्चरणाः | |
| २ | श्री काणियूरुमठाधीश | श्री१०८ श्री विद्यासमुद्रतीर्थ श्रीमच्चरणाः | |
| ३ | श्री शीरूरुमठाधीश | श्री१०८ श्री लक्ष्मीन्द्रतीर्थ श्रीमच्चरणाः | |
| ४ | श्री पुत्तिकामठाधीश | श्री१०८ श्री सुज्ञानेन्द्रतीर्थ श्रीमच्चरणाः | |
| ५ | श्री कृष्णापुरमठाधीश | श्री१०८ श्री विद्यारत्नतीर्थ श्रीमच्चरणाः | |
| ६ | श्री पेजावरमठाधीश | श्री१०८ श्री विश्वेशतीर्थ श्रीमच्चरणाः | |
| ७ | श्री काणियूरुमठाधीश | श्री१०८ श्री विद्यावारिनिधितीर्थ श्रीमच्चरणाः | |
| ८ | श्री सोदामठाधीश | श्री१०८ श्री विश्वोत्तमतीर्थ श्रीमच्चरणाः | |
| ९ | श्री अदमारुमठाधीश | श्री१०८ श्री विबुधेशतीर्थ श्रीमच्चरणाः | |
| १० | श्री फलिमारुमठाधीश | श्री१०८ श्री रघुवल्लभतीर्थ श्रीमच्चरणाः | |

## इतरमठाधीशाः

१ श्री भण्डारकेरिमठाधीश श्री१०८ श्री विद्यामान्यतीर्थ श्रीमच्चरणाः

---

**एतावत्पर्यन्तमधो निर्दिष्टसमित्या मुद्राप्य विक्रयाय सज्जाः**

| ग्रन्थाः | मूल्यं च |
|---|---|
| १. **श्रीमन्महाभारततात्पर्यनिर्णयः** | |
| श्रीमद्वादिराजीयभावप्रकाशिकाटीकासहितः | मूल्यं ६–०–० |
| २. **गुर्वर्थदीपिका** श्रीमन्न्यायसुधाटिप्पणी | अर्धमूल्यं १-१२-० |
| ३. **स्तोत्ररत्नमाला** अधिकरणनामावल्या-एकादशी | |
| निर्णयेन-भूगोळवर्णनेन च सहिता | मूल्यं १–२–० |
| ४. **गुर्वर्थदीपिका** तत्त्वप्रकाशिकाटिप्पणी | अर्धमूल्यं १–८–० |

इदानीं मुद्रणायारब्धं उपन्यासमाला कल्पलतेत्यादिकम् ।

## विशेषसूचना ।

क्वाप्यलब्धपूर्वाणामत एवापूर्वाणां श्रीमद्भाविसमीरवादिराजीयोपनिषट्टिप्पणीमूलपुस्तकानां महता प्रयत्नेन स्वयं संग्रहं कृत्वापि मुद्रापणायास्माकं तानि दत्तवतां श्रीमत्सोदामठाधीशश्रीविश्वोत्तमतीर्थश्रीमच्चरणानां तथा श्रीभण्डारकेरिमठाधीशानां श्रीविद्यामान्यतीर्थश्रीमच्चरणानामुपकारं स्मृत्वा प्रतिकर्तुमक्षमेयं समितिः केवलं साहस्रीतोऽप्यधिकनतिततिपुरस्सरं तान् श्रेयसा योजयत्विति देवदेवं श्रीकृष्णं प्रार्थयते ।

इत्यभ्यर्थयिता,

**कार्यदर्शी.**

---


पुस्तकप्राप्तिस्थानम्:—

१ श्रीवादिराजीयग्रन्थप्रकाशनसमितेः कार्यदर्शी,

**ए. नारायण तन्त्री**, शिरोमणिः विद्वान्,

पण्डितः संस्कृतकालेज, उडुपि, द. क.

---

MAJESTIC PRESS, UDIPI.